வேதாந்தம்






அத்வைத ரஸ மஞ்சரி

# ॥ अद्वैतरसमञ्जरी ॥

20-4

नल्लाकविप्रणीता । स्वकृत परिमलाख्यया

व्याख्यया संवलिता ।

पोलकग्रामाभिजनैः त्रिशिरःपुरवासिभिः श्रीवासु-

देवानन्दयतीन्द्रप्रसादासादितब्रह्मविद्यैः

ब्रह्मश्री. सुन्दरेश शास्त्रिभिः सम्यक्

परिष्कृता । मीमिसल् ग्रामवासिना

श्रीकृष्णशास्त्रिणा



श्रीरङ्गनगरस्थ

श्रीवाणीविलासमुद्रणालये मुद्रिता

विजयतेतराम् ॥

१९२१






# ॥ अद्वैतरसमञ्जरी ॥



नल्लाकविप्रणीता । स्वकृत परिमलाख्यया

व्याख्यया संवलिता ।

पोलकग्रामाभिजनैः त्रिशिरःपुरवासिभिः श्रीवासु-

देवानन्दयतीन्द्रप्रसादासादितब्रह्मविद्यैः

ब्रह्मश्री. सुन्दरेश शास्त्रिभिः सम्यक्

परिष्कृता । मीमिशल् ग्रामवासिना

श्रीकृष्णशास्त्रिणा






श्रीरङ्गनगरस्थ

श्रीवाणीविलासमुद्रणालये मुद्रिता

विजयतेतराम् ॥

१९२१

॥ श्रीः ॥

# ॥ भूमिका ॥

भो भो आर्यमहाशयाः विदितवेदितव्याः विद्वन्मणयः इदमत्र कर्णे कुरुत। इह संसारे संपादनीयेषु चतुर्विधपुरुषार्थेषु तुरीय एव पुरुषार्थो मोक्षाभिधानः सततसन्तन्यमानसंसारमूलोच्छेदोपलक्षितस्वप्रकाशपरमानन्दलक्षणसद्ब्रह्मात्मैक्यस्वरूपः तत्साक्षात्काराभिव्यंग्यः क्षयिष्णुत्वादिदोषग्रामगन्धहीनत्वेन मूर्धाभिषिक्ततया शमदमादिसमलंकृतानां साधकधुरीणानां हृदयंगमतां प्रतिपद्यत इत्यत्र सर्वेषां औपनिषदशास्त्रमर्मोद्घाटनप्रवीणानां संप्रतिपत्तिः—स च साक्षात्कारः प्रचुरजन्मसमभ्यस्तविहितानुष्ठानप्रयुक्तचेतःपरिपाकसापेक्षौपनिषदविचारमनननिदिध्यासनसाध्यः इति च वेदान्तडिण्डिमाघातः। विचारमननादीनामसम्भावनादिपुरुषापराधपरिमार्जनद्वारा साक्षात्कारे उपयोगः। पुरुषापराधाश्च चित्तदोषाख्याः पुरुषबुद्धिवैश्वरूप्यात् विविधा इति तदपमार्ष्टुकामैर्दयावशंवदैर्लोकाननुजिघृक्षुभिर्विद्वद्भ्रमरैः बहवो ग्रन्थाः नानाप्रकाराः प्रकरणाभिधानाः प्राणायिषत। तत्र च नह्लाकविकृतिरियं श्रीभगवत्पादभाष्यकल्पभूरुहसमुल्लसदाद्वितीया-

त्माभिव्यक्तिफलस्य आस्वादयित्री रसमञ्जरीसमाख्यासमलं-
कृता सरळसुश्लिष्टपदसंदृब्धा समुचितसमुदाहरणसमुन्नता सं-
चकास्ति सर्वोपरि इत्येतत् , नानातंत्रनिष्णातस्वबुद्धिवैशाल्य-
वैशाखपरिमथितशारीरकमीमांसाब्धिसमुद्भूतात्मानन्दहैयङ्ग
वीनरसास्वादतुन्दिलान्तःकरणानां विदुषां अनाघ्रातशास्त्र
गन्धानां च मनस्समावर्जयतीत्येतच्च आनुभविकमिदं पश्यतां
इति नात्र लेखिन्याः व्यापारावकाशः । तदिदं ग्रन्थरत्नं
सव्याख्यममुद्रितपूर्वंदुरवापं विमृशतां दुरवगाहशास्त्रजालप्र
चुरपरिचयरहितानपि लोकाननुजिघृक्षूणां अतस्तद्ग्रन्थरत्नं
प्रचिकटयिषूणां श्रीपरमहंसपरिव्राजकाचार्य श्रीकृष्णानन्दय-
तीन्द्रान्तेवासिनां छात्रान्तःकरणगतकलिकालुष्यतमोपनो
दनद्युमणीनां यमिमणीनां श्रीवासुदेवानन्दाभिधानसमलंकृ-
तानां अस्मद्गुरुचरणानां समाज्ञातोपसंचोदितेन मीमिशल्
ग्रामवास्तव्येन श्रीकृष्णशास्त्रिणा मुद्रणाय सज्जीकृतं एनम्
ग्रन्थमणिं यथामति पर्यशोधयम् । तमेनं ग्रन्थमवलोकयद्भिः
विपश्चिद्भिः पुरुषप्रमादादिसुलभां अशुद्धिं परिहरद्भिः हंस-
सरूपैर्भाव्यं इत्याशंसते कश्चन विद्वद्विधेयः ।

सुन्दरशास्त्री ।

पोळकग्रामाभिजनः त्रिशिरःपुरवासी

20-4

॥ परब्रह्मणे नमः ॥

# ॥ अद्वैतरसमंजरी ॥

---

अद्वैतमेव परमार्थतया विवेक्तु
मङ्गीकृतद्विपनराकृतिसन्निवेशः ।
अद्वैतगोचरमशेषविशेषमन्त-
राविष्करोतु वरदो मम विघ्नराजः ॥ १ ॥

## ॥ परिमलाख्या अद्वैतरसमञ्जरीव्याख्या ॥

वन्दे कुञ्जरसारूप्यव्यञ्जकास्यं महःपरम् ।
मन्मथारातिसंभूतं मङ्गलैकायनं महत् ॥

भुवनाद्भुतानुभावं परमशिवेन्द्राभिधं भजामि गुरुम् ।
यदपाङ्गव्यापारः पुंसां संसारतारको भवति ॥

वेदान्तसूत्रवृत्तिप्रणयनसुव्यक्तनैजपाण्डित्यम् ।
वन्देऽवधूतमार्गप्रवर्तकं श्रीसदाशिवब्रह्म ॥

या मया रचिता पद्यैरद्वैतरसमञ्जरी ।
विदुषां प्रीतये तस्या विवृतिः क्रियतेऽधुना ॥

प्रारिप्सितस्य ग्रन्थस्य निष्प्रत्यूहपरिपूरणाय प्रचयगमनाय च प्रत्यूहनायकश्रीलम्बोदरानुस्मरणरूपं मङ्गलमाचरन्नेव स्वस्य चिकी-

षितग्रन्थोपयोगिशास्त्रार्थप्रतिपत्तिं प्रार्थयते— **अद्वैतमिति** । अद्वैतं ब्रह्मात्मैक्यमेव परमार्थः सत्यम्, द्वैतं तु नामरूपात्मना प्रतीयमानं जगन्मिथ्येत्येवं विविक्ततया प्रदर्शयितुं अङ्गीकृतः अवयवीकृतः द्विपनराकृत्योः गजनराकारयोः सन्निवेशः संस्थानाविशेषः येन स तथोक्तः । वरद इति साभिप्रायं विशेषणं प्रार्थनार्हत्वं सूचयति । एवंभूतो विघ्नराजः अद्वैतमतानुबन्धि सकलं संप्रदायरहस्यं मम चित्ते प्रकटीकरोत्विति योजना । एतेन यथा विजातीययोरपि गजनराकारयोः विघ्नराजरूपेणाभेदो दृश्यते, तथैव कृत्स्नस्यापि प्रपञ्चस्याधिष्ठानचिद्रूपेणाभेदः संभवतीत्यर्थलाभादद्वैतविषयासंभावनानिराकरणं कृतं भवति ॥ १ ॥

**अध्यासविस्फुरदनेकविधात्मभेद-**
**मज्ञानमाश्रितवतः सुलभा न मुक्तिः ।**
**आदर्शगेहमभितः प्रतिबिम्बितान्त-**
**र्द्वारं गतस्य न बहिर्गतिरर्भकस्य ॥ २ ॥**

अथ चिकीर्षितस्य ग्रन्थस्य विषयप्रयोजनादिप्रतिपादनोपोद्घातत्वेन प्रथममात्मभेददर्शनवतस्तदज्ञानिनः मुक्तिदौर्लभ्यं दर्शयति **अध्यासेति**—अध्यासेनातस्मिन् तद्बुद्ध्या विस्फुरन्तः विपरीतं प्रतीयमानाः अनेकविधाः बहुप्रकाराः आत्मभेदाः जीवात्मानः यस्मिन् तत् तथोक्तम् । अहमज्ञ इत्यनुभवसाक्षिकमनिर्वचनीयं अज्ञानमाश्रितवतः अनर्थनिवृत्त्युपलक्षितानन्दावाप्तिरूपा मुक्तिः सुलभा न भवति । अत्र दृष्टान्तः आदर्शेत्यादिना अभिहितः । अभितः समन्तात्

प्रतिबिम्बितं प्रतिफलितं अन्तर्विद्यमानं द्वारं यस्मिन् तथोक्तं आदर्शगेहं दर्पणनिर्मितं गृहविशेषं गतस्य प्रविष्टस्यार्भकस्य बालस्य तद्गृहात् बहिर्गतिः निष्क्रान्तिः सुलभा नेत्यन्वयः। तथा च यथा बालः दर्पणनिर्मितगृहविशेषं प्रविष्टः तदन्तर्भित्तिभागेषु एकस्यैव द्वारस्य प्रतिबिम्बेषु बहुषु प्रतीयमानेषु इदं सत्यमिदमसत्यमिति विवेचयितुं अशक्यतया बिम्बभूताद्वितीयसत्यद्वारज्ञानाभावेन दर्पणगृहाद्बहिर्निर्गन्तुं न शक्नोति, किं तु द्वारप्रतिबिम्बेषु द्वारबुद्ध्या प्रवेष्टुकामः तद्भित्त्यभिहतशिरस्तया दुःखेन संभ्रान्तः तदन्तरेवावतिष्ठते, तथा नित्यशुद्धबुद्धमुक्तस्वभावः प्रत्यगात्मा अनाद्यनिर्वचनीयं स्वावारकमज्ञानमाश्रित्यात्मन्यनात्मभूतं देहेन्द्रियपुत्रभार्यादिकं अहं ममेत्यात्मत्वेनात्मीयत्वेन चाध्यस्य तदीयलाभच्छेदादौ हर्षविषादादिकमनुभवन् रागद्वेषदूषितान्तःकरणतया पुण्यापुण्यकर्मसु प्रवर्तमानः तत्फलं च स्वर्गनरकादिकं देवतिर्यङ्मनुष्यादिभावेनोपभुञ्जानः जन्ममरणप्रवाहावर्ते परिवर्तते। ब्रह्मात्मैकत्वविज्ञानाभावेन संसारान्नविमुच्यत इत्यर्थः। तथा च श्रुतिः "अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः। दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः॥" उक्तं च मदीये सुभद्रापरिणयनाटके—

अमी दारा एते किल मम कुमारा इति वृथा
विमोहेन ग्रस्तो निरवधिभवारण्यपथिकः।
जरत्यन्धे कूपे जनिमरणरूपे निपतितो
निमज्जन्नुन्मज्जन् कियदपि न पश्यामि शरणम्॥ इति ॥२॥

शान्त्यादिसाधनवता पुरुषोत्तमेन
संप्राप्यते निजपदं वरदेशिकोक्त्या ।
चोरैररण्यसरणिं गमितेन पुंसा
देशो निजो हि तदभिज्ञगिरैव गम्यः ॥ ३ ॥

ननु अज्ञानिनो मुक्तिः न सुलभेत्युक्तम् । कस्य तर्हि मुक्तिः सुलभेत्यपेक्षायामाह शान्त्यादीति । शान्तिरन्तरिन्द्रियनिग्रहः आदिः येषां तानि शान्त्यादीनि । दान्त्युपरतितितिक्षाश्रद्धासुमुक्षारूपाणि यानि ज्ञानसाधनानि तद्वता अत एव पुरुषोत्तमेन वरदेशिकोक्त्या करबदरितब्रह्मतत्त्वतया श्रेष्ठस्याचार्यस्योपदेशेन ज्ञानोदये सति निजपदं स्वमहिमरूपं संप्राप्यते सम्यगभेदेन प्राप्यते । अत्र चोरैरित्युत्तरार्धेन श्रुत्युक्तो गन्धारपुरुषदृष्टान्तः सामान्येन निबद्धः । तथा हि—यथा गन्धारदेशवास्तव्यः कश्चित्पुरुषः तस्करैर्बद्धचक्षुः स्वदेशादतिभयंकरमरण्यं प्रापितः दुःखार्तः किमपि शरणमनुपलभ्य विक्रोशन् स्थितः । अथ कथंचिदतर्कितोपगतेन केनचिद्दयालुना चक्षुर्बन्धं मोचयित्वा स्वदेशमार्गे उपदिष्टे सति तदुपदेशक्रमेण ग्रामाद्ग्रामं व्रजन् स्वदेशं प्राप्य निर्वृतः संवृत्तः । तथैवात्मापि स्वमहिमप्रतिष्ठितः स्वदेशभूतान्महिम्नः पुण्यपापतस्करैः मोहपटबद्धदृष्टिः शुक्रशोणितात्मकं सकलानर्थसंभारभाजनं देहारण्यं प्रापितः तापत्रयेण तप्यमानः केनापि पुण्यपरिपाकेनासादितस्य आत्मसाक्षात्कारवतः आचार्यस्योपदेशेन दर्शितदोषेभ्यः सांसारिकविषयेभ्यः विरक्तः तत्त्वज्ञानसंपन्नः स्वमहिमानं प्रतिपद्य निर्वृतो भवती-

त्यर्थः । एतेन शान्त्यादिमानधिकारी, ब्रह्मात्मैक्यं विषयः, स्वपदप्राप्तिः प्रयोजनमित्युक्तं भवति । श्रुतिस्तु—"यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत्" इत्यादि ॥

भूपा भवानिति गुरूपनिषद्वचोभिः
कर्त्रात्मता गलति सिध्यति भूपभावः ।
राजात्मजस्य निजतत्त्वविबोधनेन
व्याधात्मताविगलनादिव राजभावः ॥ ४ ॥

ननु यथा गन्धारदेशप्राप्तौ तदुपायभूतमार्गज्ञानस्य गमनक्रियापेक्षास्ति, तथा तत्त्वज्ञानस्यापि स्वरूपप्राप्तौ कर्म किंचिदपेक्षणीयं स्यादित्याशङ्क्य, ज्ञानमात्रसाध्या स्वरूपप्राप्तिरित्यस्मिन्नर्थे अनुरूपदृष्टान्तमुदाहरति—**भूपेति** । नासि त्वं संसारी कर्तृत्वादिधर्मवान्, किं तु निर्मृष्टाहंकारपराग्भावं जीवेश्वरानुगतं सत्यज्ञानानन्दरूपं तदेवासीत्येतदर्थकैः आचार्योपदिष्टैः तत्त्वमसीत्यादिभिर्वेदान्तवाक्यैः सर्वदुःखविनिर्मुक्तैकचैतन्यात्मकोऽहमित्यात्मतत्त्वज्ञाने निष्पन्ने सति तावतैव मिथ्याज्ञानस्य निवर्तितत्वेन तन्निमित्तं कर्तृत्वादिकं स्वत एव निवर्तते । तन्निवृत्तौ च यथास्थितं भूमरूपमेव परिशिष्यते । यथा कश्चिद्राजकुमारः उन्मादेन वनं प्रविश्य व्याधगृहे वसन्नुन्मादावस्थायामिव शान्तेऽप्युन्मादे नष्टराजत्वस्मृतितया व्याधोऽहमिति मन्यमानः स्थितः । अथ नासि त्वं व्याधः किं तु राजैवेति सोपपत्तिकैः आप्तवचनैः राजाहमस्मीति निश्चयेन राजैव सं-

पन्न: तद्वदित्यर्थः । न हि तस्य राजात्मताज्ञानानन्तरं राजभाव-प्राप्तौ व्याघ्रभावनिवृत्तौ वा यत्नान्तरमस्ति । तथैव ब्रह्मात्मतावगमान-न्तरं ब्रह्मभावप्राप्तौ कर्तृत्वादिनिवृत्तौ वा न व्यापारान्तरमपेक्षणीय-मिति भावः । तदुक्तं वार्तिककारे—

"राजपुत्रो रोगवशादुन्मत्तः सन्वनं गतः ।
चिरं व्याघ्रगृहे स्थित्वा व्याघ्रोऽस्मीत्यभ्यमन्यत ॥

उन्मादशान्तावप्येष न तां सस्मार राजताम् ।
अभिज्ञः कश्चिदागत्य स्मारयामास राजताम् ॥

ततो राज्येऽभिषिक्तः सन्व्याघ्रतां नैव मन्यते ।
ब्रह्मण्येवंविधौ ज्ञेयौ बन्धमोक्षौ प्रकल्पितौ ॥

ब्रह्मैवाविद्यया देहं प्राप्य रागादिदोषतः ।
सदसत्कर्मजन्मादिबन्धमात्मन्यमन्यत ॥

नित्यकर्मविपाकेन रागाद्युपशमे सति ।
गुरुशास्त्रोपदेशेन ब्रह्मत्वं स्वस्य बुध्यते ।
जीवन्मुक्तिं ततः प्राप्य स्वस्य बन्धं न मन्यते" ॥ ४ ॥

नन्वात्मनि कूटस्थनित्ये कर्तृत्वादिबन्धस्य कल्पितत्वात् कथं निवृत्तिः । न ह्यविद्यमानं निवर्तते । निवृत्तेर्ध्वंसरूपत्वेन प्रतियोगि-जन्यत्वात् । तदनिवृत्तौ वेदान्तशास्त्रवैफल्यमित्याशङ्क्य, वन्ध्यापुत्र-शरीरतन्नाशादिवदात्मनि बन्धमोक्षौ कल्पिताविल्येतमेवार्थमवगमयितुं वेदान्तशास्त्रप्रवृत्तेः न तद्वैफल्यम् । न हि तत्त्वमस्यादिवाक्योत्पन्न-

एव तत्त्वज्ञानस्य भ्रमनिवृत्तिं विना साधनीयं किंचिदवशिष्यते । तदुक्तं संक्षेपशारीरके—

"तव बोधमात्रमनुमेयमत-
स्तव मोहमात्रमपनेयमपि ।
तव बोधमोहजनिहानिकरं
वचनं त्रयीशिरसि तत्त्वमिति ॥

उक्तं चानुभूतिप्रकाशिकायाम्—

"स्वानुभूत्यवसेयेऽस्मिन्प्रतीच्यब्रह्मतां जनः ।
आरोप्यशास्त्रगम्येऽस्मिन्ननात्मत्वमकल्पयत् ॥
अनुभूत्यवसेयोऽहं ब्रह्म शास्त्रसमर्पितम्
अस्मीतिबोधादारोपद्वयमत्र निवर्तते ॥ इति ॥

**कूटस्थनित्यसुखबोधतनोः प्रतीचो**
**बन्धो विमोचनमिति भ्रमदुर्विलासः ।**
**बन्ध्यासुतस्य वपुरादिगुणप्रपञ्चः**
**तत्पश्चता च सुतरां परिकल्पनैव ॥ ५ ॥**

एवं च भ्रमनिवृत्तौ तन्निबन्धनो बन्धोऽनिवृत्तोऽपि निवृत्त इव भवतीत्याशयवानाह—**कूटस्थे**ति । निर्विकारनित्यानन्दविज्ञानघनस्य अशक्यनिर्वचनेभ्यो देहेन्द्रियादिभ्यः प्रतीपतया सत्त्वेन प्रकाशमान- स्यात्मनः बन्ध इव मोचनमपि भ्रमदुर्विलसितम् । वस्तुतो नास्तीति यावत् । बन्ध्यापुत्रस्य शरीरमतीव सुन्दरं, औदार्यगाम्भीर्यादयो

गुणाः समग्राः, तच्च शरीरं नष्टमित्यादिकल्पनं यथा न परमार्थः तद्वदित्यर्थः । तदुक्तं ज्ञानवासिष्ठे—

"चिद्व्योमकेवलमनन्तमनादिमध्यं
ब्रह्मैव भाति निजचित्तवशात्स्वयंभु ।
आकारवानिव पुमानिव वस्तुतस्तु
वन्ध्यातनूज इव तस्य तु नास्ति देहः ॥ ५ ॥

**आपाततः प्रतिभया जगदस्तिवादः**
**सम्यङ्निरूपणविधौ न हि किंचिदस्ति ।**
**भीरोर्विभाति परितस्तिमिरं पिशाचः**
**तत्रैव दीपकलिकानयने किमस्ति ॥ ६ ॥**

ननु जीवब्रह्मणोश्चिद्रूपेणाभेदसिद्धावपि अचिद्रूपस्य जगतः सत्वात् कथमद्वैतसिद्धिरित्याशंक्याह— **आपातत इति** । आपाततः प्रतिभया भ्रान्तिमात्रेण जगतः सद्भावप्रवादः किमिदं कुतस्त्यं किं रूपमिति निपुणतरं निरूपणे क्रियमाणे आरम्भणाधिकरणन्यायानुगृहीतया 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुत्या सद्रूपचैतन्यव्यतिरिक्तवस्त्वन्तराभावनिर्णयेन जगतः स्वातन्त्र्येण सत्तैव न सिध्यति। यथा अन्धकारे समन्ततः भीतिमज्जनपरिकल्पितस्य प्रकाशाभावमात्रजीवनस्य पिशाचस्य समीपे दीपानयने सति स्वतः सत्ताशून्यत्वं व्यक्तं भवति तथेत्यर्थः । तथा च नाद्वैतहानिरिति भावः । तदुक्तं वार्तिकसारे—

यत्स्याद्यस्मिन्नविज्ञाते ज्ञाते तस्मिन्नतद्भवेत् ।
स्वतो निरात्मकं तत्स्यादिदं द्वैतं च तादृशम् ॥
अहं ब्रह्मेत्यविज्ञाते द्वैतमेतद्विभासते ।
ज्ञाते त्वविद्याविध्वंसान्न क्वचिद्भेदधीर्भवेत् ॥ इति ॥

उक्तं च संक्षेपशारीरके—

तव गाढमूढतमसा जनितं
जगदीश जीववपुषा सकलम् ।
प्रतिभाति तावदतिदृढं दृढवत्
समुदेति यावदवबोधरविः ॥ ६ ॥

**चिज्ज्योतिरेव जगदात्मतया चकास्ति**
**वस्त्वन्तरं किमपि नास्ति विचार्यमाणे ।**
**रज्जोर्भ्रमाधिकरणादपि रज्जुसर्पः**
**तत्त्वान्तरं भवितुमर्हति किं कथंचित् ॥ ७ ॥**

ननु 'आत्मन आकाशः संभूतः' इत्यादिश्रुतिषु आत्मनः सकाशात्प्रपञ्चस्योत्पत्तिः श्रूयते । तच्च नाभेदे घटते । कार्यकारणभावस्य भेदनियतत्वादित्याशङ्क्याह— **चिज्ज्योतिरिति** । यथा रज्ज्वपेक्षया तदध्यस्तः सर्पः हेतुशतेनापि पदार्थान्तरं भवितुं नार्हति, किंतु कालत्रयेऽपि रज्जुरेव तस्य स्वरूपम्, एवं स्वप्रकाशचैतन्यापेक्षया तदारोपितं जगद्विचार्यमाणे वस्त्वन्तरं न भवति, किं तु चिदेव तस्य स्वरूपमित्यर्थः । तथा चोक्तं भाष्ये "यथा मृगतृष्णिकोद-

कादीनामूषरादिभ्योऽनन्यत्वं दृष्टनष्टस्वरूपत्वात्, स्वरूपेणानुपाख्यत्वात्, एवमस्य भोक्तृभोग्यादिप्रपञ्चस्य ब्रह्मव्यतिरेकेणाभाव इति द्रष्टव्यम्' इति । उक्तं च वार्तिककारैः—

सर्पादीनां कल्पितानां रज्जुरात्मा यथा तथा ।
मायामयस्य सर्वस्य चिद्वस्त्वात्मेति सुस्थितम् ॥ इति

एवं च कारणवाक्यप्रतिपन्नभेदस्य प्रातिभासिकत्वेनानन्यपराद्वैतश्रुतिबोधितपारमार्थिकाभेदविरोधित्वाभावान्नाद्वैतहानिरिति भावः ॥

**विश्वं समस्तमपि विभ्रममात्रमेत-**
**दात्मैव सन्नयमनन्यसुखप्रकाशः ।**
**स्फूर्त्यैव विश्वमपि सत्यमितीष्यते चे-**
**त्को नाम शुक्तिरजतेन धनी भवेन्न ॥ ८ ॥**

ननु विश्वं सत्यं प्रकाशमानत्वात् आत्मवत् इत्यनुमानाद्विश्वस्य सत्यत्वं साध्यत इत्याशङ्क्य, अप्रयोजकत्वान्नायं हेतुरित्याह— **विश्वमिति** । सत्यत्वे, स्वप्रकाशत्वमेव हेतुः । न तु प्रकाशमानत्वमात्रं । तस्मादात्मैव स्वप्रकाशत्वात्परमार्थः सन् । विश्वं तु विभ्रममात्रं मिथ्येति यावत् । यदि च प्रकाशमानत्वमात्रेण विश्वस्यापि सत्यत्वमाश्रियते, तदा शुक्तिरजतस्यापि सत्यत्वापत्त्या सर्वोऽपि लोकः सत्यरजतेनेव शुक्तिरजतेनापि धनवान् भवेत् । तच्चव्याहतमित्यर्थः । तदुक्तम्—

"शुक्तौ रजतप्रतिभा जाता कटकाद्यर्थ समर्था चेत् ।
दुःखमयी ते संसृतिरेषा निर्वृतिदाने निपुणा स्यात् ॥ ८ ॥

**नास्ति प्रतीत्यवसरे न पुरा न पश्चा-**
**दाश्चर्यमेतदवभाति तथापि विश्वम् ।**
**यद्वा किमद्भुतमिवेह महेन्द्रजालं**
**मायाविकल्पितमपि प्रतिभासते हि ॥ ९ ॥**

ननु विश्वमसच्चेन्न प्रतीयेत, प्रतीयेत च । तस्मात्सदित्यास्थेयमित्याशङ्क्याह—नास्तीति । पारितोषिकलिप्सया प्रभूणामद्भुतं दर्शयितुं प्रवृत्तेनाधुनिकेनाप्यैन्द्रजालिकेन मायया विरच्यमानं पर्वतसमुद्भ्रमणसप्तार्णवप्लावनाद्यनेकाश्चर्यपर्याप्तिस्थानं महेन्द्रजालं तद्द्रष्टृभिरसत्यमित्यवगम्यमानमपि यथा सत्यवद्भासते, तथा निरुपाधिनिरवधिकानादिसंसारचक्रं लीलया प्रवर्तयता परमेश्वरेण मायया कल्पितजगदिन्द्रजालं कालत्रयेऽप्यवस्तुभूतमपि, अवस्तुत्वेनानवगम्यमानं वस्तुवत्प्रथत इत्यत्र किमाश्चर्यम् । अघटितघटनापटीयस्त्वान्मायाया इत्यर्थः । तथा चोक्तं संक्षेपशारीरके—

"न हि चित्तदृश्यमपि सत्यमिति
प्रतिपन्नमस्ति भुवि किंचिदपि ।
रशनाभुजङ्गसदृशं सकलं
जगदिन्द्रजालमिति सिद्धमतः ॥" इति

एवं च प्रपञ्चस्य सत्वासत्वाभ्यां अनिर्वचनीयत्वान्न प्रतीत्यनुपपत्तिरिति भावः ॥ ९ ॥

एकोऽपि सन्नयमनेकतया विभाति
भूमास्वकल्पिततमःपटलानुषङ्गात् ।
इन्दुर्द्वितीयरहितोऽपि च सद्वितीय-
भावेन भाति पुरुषस्य निजाक्षिदोषात् ॥

नन्वात्मनो यद्येकत्वं परमार्थतः तर्हि तथैव कुतो न भासत इत्याशङ्क्य स्वदोषमाहात्म्यादेवेति परिहरति—**एकोऽपीति**। यथा वस्तुतो द्वितीयचन्द्ररहितस्य प्रसिद्धचन्द्रस्य द्वितीयचन्द्रवत्तया प्रतिभाने पुरुषस्य स्वचक्षुर्दोषमन्तरेण कारणान्तरं न दृश्यते, एवं परमार्थतः एकस्यापि भूमात्मनः पितृपुत्रगुरुशिष्यप्रभुभृत्याद्यनेकात्मत्वेन निर्भासेऽपि स्वाध्यस्तमज्ञानं विना हेत्वन्तरं न विद्यत इत्यर्थः । तथा च "न ह्ययं स्थाणोरपराधो यदेनमन्धो न पश्यति, इति न्यायेन स्वस्य वस्तुयाथात्म्यावगमसामर्थ्याभावमात्रेण वस्तुस्वभावस्यान्यथयितुमशक्यत्वादिति भावः ॥१०॥

आलोक्यतां भुवनचक्रमलातचक्र-
मत्यन्तविभ्रमविजृम्भितमस्थिरं च ।
दैवाद्भ्रमस्य विरतौ समुपस्थितायां
नालोक्यते किल पुरेव पुनस्तदेव ॥ ११ ॥




अथान्वयव्यतिरेकाभ्यां प्रपञ्चस्य भ्रान्तिजन्यत्वं दर्शयति—आलोक्यतामिति । भुवनचक्रं जगज्जातम्, अलातचक्रं विघूर्णाङ्गार(?)प्रभागविशिष्टस्य काष्ठविशेषस्य परितो भ्रमणेन चक्रीकरणं यत् तदित्यवलोक्यतामिति यावत् । अलातचक्रेऽत्यन्तविभ्रमविजृम्भितत्वं अतिमात्रविघूर्णनजनितत्वम् । भुवनचक्रे तु अतिमात्राध्यासकल्पितत्वम् । अस्थिरत्वं तु उभयत्रापि तुल्यम् । तथा च अलातचक्रं घूर्णने सति स्फुरति । घूर्णनविरमे तु पूर्ववन्न स्फुरतीत्यन्वयव्यतिरेकाभ्यां तत् घूर्णनजन्यमिति यथा निर्धार्यते, तथा भुवनचक्रं अध्यासे सति स्फुरति, अध्यासनिवृत्तौ तु पूर्ववन्न स्फुरतीत्यन्वयव्यतिरेकाभ्यामध्यासजन्यमिति निश्चीयते । न ह्यध्यासनिवृत्तौ यथापूर्वं संसारस्यानुवृत्तिरस्ति । तदुक्तं भाष्ये—

"तस्मान्नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वम्,
यस्य तु यथापूर्वं संसारित्वं नासाववगतब्रह्मात्मभावः" इति ॥११॥

**गन्धर्वपत्तनमिदं जगदव्यवस्थं**
**चैतन्यनामनि विहायसि नश्यकास्ति ।**
**विद्योतते यदि च विद्युदिवात्मविद्या**
**सद्यस्तिरोभवति सर्वमिदं तदैव ॥ १२ ॥**

ननु शुक्तिरौप्यादेर्मिथ्यात्वं युक्तमङ्गीकर्तुं, शुक्तित्वसाक्षात्कारेण तस्य बाधदर्शनात् । प्रपञ्चस्य पुनः कथं मिथ्यात्वं बाधादर्शनादित्याशङ्क्य, तस्यापि स्वरूपतत्वसाक्षात्कारे सति, बाधोऽवश्यंभावीत्याह—

गन्धर्वेति ॥ लोकव्यवहारप्रसिद्धं गन्धर्वनगरं भूताकाशे प्रकाशते, तत्रैव च क्षणेन स्वतस्तिरोहितं भवति । जगद्गन्धर्वनगरं तु चिदाकाशे भासमानं तत्र स्वत एव न तिरोभवति । किं तु स्वस्य तिरोधाने परमात्मविद्यामपेक्षत इति विशेषः ॥ १२ ॥

**आरोपितस्य जगतः प्रविलापनेन**
**चित्तं शिवात्मकतया परिशिष्यते नः ।**
**शत्रून्निहत्य हतयन्तुरधो निपातात्**
**गन्धद्विपो भवति केवलमद्वितीयः ॥ १३ ॥**

ननु तत्वसाक्षात्कारेण प्रपञ्चनिवृत्तावपि तत्वसाक्षात्कारस्याखण्डाकारान्तःकरणवृत्तिरूपत्वात्सद्वितीयतापत्तिरित्याशङ्क्य, कतकरजोन्यायेनाखण्डाकारवृत्तेरपि निवृत्त्या चिन्मात्रं परिशिष्यत इत्याह— आरोपितेति । आरोपितं जगत्प्रविलाप्य चित्तवृत्तौ स्वयमपि विलीनायां सत्यां प्रपञ्चोपशमरूपः शिव एव परिशिष्यते । युद्धमध्ये संभूतमदारम्भकुम्भिवरः मदान्धतया शत्रुसैन्यमनुप्रविष्टः धृष्ट तदीयसैनिकैराक्रम्यमाणः स्वोपरिस्थिते हस्तिपके शरवर्षैः परसैनिकान् क्षयं गमयित्वा युद्धसंमर्देन स्वयं च क्षयं गते पतिते च सति स यथास्वशरीरमात्रेण संपद्यते तथेत्यर्थः । तदुक्तं ब्रह्मगीतायाम्—

विसृज्य संदेहमशेषमास्तिकाः
प्रतीतमेतन्निखिलं जडाजडम् ।
गुरूपदिष्टेन शिवं विलोकये-
द्विलोकनं चापि शिवं विलोकयेत् ॥

विलोकनं चापि शिवं विलोकयन्
विलोकनं चापि विसृज्य केवलम् ।
स्वभावभूतस्वचितावशिष्यते
चितावशेषोऽपि न तस्य तत्त्वतः ॥ १३ ॥

**अद्यास्तमेतु वपुराशशितारमास्तां**
**कस्तावतापि मम चिद्वपुषो विशेषः ।**
**कुम्भे विनश्यति चिरं समवस्थिते वा**
**कुम्भाम्बरस्य न हि कोपि विशेषलेशः ॥**

नन्वेवं ज्ञानोत्पत्तिसमय एव सवासनमिथ्याज्ञानेन स्वकार्येण सहाज्ञानस्य निरस्तत्वेन निरालम्बनत्वाद्विदुषः शरीरं सद्य एव विपद्येतेत्याशङ्कायामाह— अद्येति । यथा कलशसंबन्धिविनाश-चिरावस्थानाभ्यां कलशसंबन्धवर्जितस्य तदन्तर्गताकाशस्य कश्चिद-तिशयो नास्ति तथा शरीरानुबन्धिसद्यस्तनास्तमयचन्द्रतारकोपल-क्षितदीर्घकालजीवित्वाभ्याम्, शरीरसम्बन्धरहितस्य प्रत्यगात्मनः हानिवृद्ध्याद्यतिशयः कोऽपि नास्तीत्यर्थः । अयमभिसन्धिः । विदुषः शरीराभावेन तन्नाशापादनमेव न युज्यते । "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति श्रुतेः । अत्र भाष्यम् । "शरीरे पतिते अशरीरत्वं स्यान्न जीवतः इति चेन्न, सशरीरत्वस्य मिथ्याज्ञाननि-मित्तत्वात्" इत्यारभ्य "सिद्धं जीवतोऽपि विदुषोऽशरीरत्वम्" इत्यन्तं । तथा च श्रुत्यन्तरम् । "तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्य-

स्ता शयीतैवमेवेदं शरीरं शेते, अथायमशरीरोऽमृतः" इत्यादि । अत्र वार्तिककारः—

"अहिनिर्ल्वयनी सर्पनिर्मोको जीववर्जितः ।
वल्मीके पतितस्तिष्ठेत्तं सर्पो नाभिमन्यते ॥

एवं स्थूलं च सूक्ष्मं च शरीरं साक्षितः पृथक् ।
भातन्तादात्म्यविभ्रान्तिरहितं व्यवतिष्ठते ॥

यस्माद्वपुः पृथग्भूतं तस्मात्साक्ष्यशरीरकः ।
संबन्धे सशरीरत्वं स च बोधेन बाधितः ॥

स्रगज्ञानमनादाय नाहियोगस्स्रजो यथा ।
प्रतीचो देहसंबन्धो नात्माज्ञानमृते तथा ॥

प्रत्यग्ज्ञानशिखिध्वस्ते मिथ्याज्ञाने सहेतुके ॥
नेति नेतीति रूपत्वादशरीरो भवत्ययम् ॥" इति

परमार्थतस्तु अज्ञाननिवृत्तावपि विदुषःशरीरधारणं नानुपपन्नम् । तथा हि—अज्ञानस्य तिस्रोऽवस्थाः संभवन्ति । जगज्जीवविषयसत्यप्रतीतिरूपा प्रथमा । आवरणादिकार्योत्पादनसामर्थ्यरूपा द्वितीया । जीवभावजगद्भावप्रतिभारूपा तृतीया । तत्र तत्त्वमस्यादिवेदान्तवाक्यजन्यपरोक्षज्ञानेन प्रथमावस्था निवर्तते । अहं ब्रह्मास्मीत्यपरोक्षज्ञानेन द्वितीयावस्था नश्यति। प्रारब्धनाशेन तृतीयावस्था प्रशाम्यति ।

"शास्त्रेण नश्येत्परमार्थदृष्टिः
कार्यक्षमा नश्यति चापरोक्ष्यात् ।

प्रारब्धनाशात्प्रतिभासनाशः

एवं त्रिधा नश्यति चात्ममाया ॥" इति संक्षेपशारीरकवचनात् । तस्य च मूलम् । "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः" इति श्रुतिः । अत्रानुभूतिप्रकाशिका—"जगद्भ्रमं जीवभावं वासनां जीवधारणाम् । चतुष्टयन्निराकुर्यादभिध्यानादिभिः क्रमात् ॥ अभितो ब्रह्मरूपत्वध्यानाद्याति जगद्भ्रमः । ब्रह्मत्वे योजिते स्वस्य जीवभावोऽपगच्छति ॥ अद्वैते भासिते तत्वे वासना विनिवर्तते । आरब्धान्ते देहहानिर्मायेत्थं क्षीयते किल" इति ॥ १४ ॥

**संकल्पमात्रसुविकल्पितमूर्ति विश्वं**
**विश्वस्य सत्यमिति मूर्छति मन्दबुद्धिः ।**
**चिन्ताप्रकर्षजनितां दयितां विदित्वा**
**सैवेति वल्गति यथा चिरविप्रयुक्तः ॥ १५ ॥**

**ननु** विश्वस्य वस्तुतो मिथ्यात्वे मिथ्येत्येवभानं स्यादित्याशङ्कायामाह—**संकल्पेति** । यथा चिरोपाचितकान्तावैधुर्यपर्युत्सुकितचेताः कामुकः कान्तामेव निरन्तरमनुचिन्तयन्नतिभूमिं गतया चिन्तया परितः स्फुरन्तीं प्रतिभाकान्तां परमार्थकान्तां मन्यमानः पश्यति, प्रसीदति, माद्यति, नृत्यति, गर्जति, मूर्छति च । तद्वदविद्वानपि स्वसंकल्पकल्पितं जगत्सत्यमिति विश्वासं कृत्वा सांसारिकानर्थव्रातमनुभवतीत्यर्थः । अत एव ज्ञानवासिष्ठे विश्वस्य संकल्पजन्यत्वं व्यतिरेकमुखेनोपपादितम् । "संकल्पसंक्षयवशाद्गलिते तु

चित्ते संसारमोहमिहिका गलिता भवन्ति । स्वच्छं विभाति शरदीव समागतायां चिन्मात्रमेकमजमाद्यमनन्तमन्तः ॥" इति ॥ १५ ॥

**स्वस्थे मयि स्वरससत्यसुखावबोधे**
**व्यामोहतो जगदिति व्यपदिश्यते यत् ।**
**अन्यत्र कुत्रचिददृष्टचरस्वरूप**
**मस्थानचित्रमिति निश्चिनुमस्तदेतत् ॥ १६ ॥**

**ननु** तर्हि सर्वानुभवसिद्धतया दुरपह्नवं जगत् किमिति प्रत्येतव्यमित्यपेक्षायां अभित्तिचित्रकर्मेत्येव निश्चेतव्यमित्याह— **स्वस्थे**ति । स्वस्थे स्वमहिमप्रतिष्ठिते स्वाभाविकसत्यादिरूपे मयि प्रत्यगात्मनि व्यामोहतोऽविवेकेन यज्जगदिति व्यपदिश्यते व्यवह्रियते वाचारम्भणमात्रत्वात् विकारस्य, वस्तुतो नास्तीति यावत् । तदेतदात्मनोऽन्यत्रासत्त्वादेव कुत्राप्यदृष्टचरस्वरूपं अस्थानचित्रं अनाधारमालेख्यमिति निश्चिनुमः निर्धारयाम इत्यर्थः । तदुक्तं ज्ञानवासिष्ठे— "अकर्तृकमरंगं च गगने चित्रमुत्थितम् । अद्रष्ट्रकं स्वानुभवमनिद्रस्वप्नदर्शनम् ॥ साक्षिभूते समे स्वच्छे निर्विकल्पे चिदात्मनि । निरिच्छं प्रतिबिम्बन्ति जगन्ति मुकुरे यथा ॥ एतत्ते राम वक्ष्यामि कार्यकारणतां विना । स्थिता ब्रह्मणि विश्वश्रीः प्रतिभामात्ररूपिणी" ॥ इति ॥ १६ ॥

आध्यासिकस्फुरणभेदतिरोहितोऽपि
चिद्धातुरेकरसतां न जहाति जातु ।

**नानाचराचरविचित्रचरित्रितोऽपि**
**चित्रः पटो न पटभावमपास्यति स्वम् ॥१७॥**

ननु यथा चित्ररूपाश्रयः पटः स्वाभाविकमैकरूप्यं जहाति, एवं जगच्चित्राश्रयः परमात्मापि चिदेकरसतां जह्यात् इति चेत् नेत्याह—**आध्यासिकेति** । काल्पनिकपदार्थप्रत्ययविशेषप्रतिबद्धयाथात्म्यप्रथनः प्रत्यगात्मा सांसिद्धिकीं चिदेकरसतां न त्यजति । यथा आलेख्यगतसुरनरखगमृगकरिगिरितुरगोरगभवनोपवनादिनानाविध। स्थावरजङ्गमच्छायाच्छादितातानवितानोऽपि चित्रपटः स्वाभाविकीं पटत्वजातिं न विमुञ्चति तथेत्यर्थः । चिदेकरसत्वं चात्मानः श्रुतिप्रसिद्धम् । "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरेयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवेति श्रुतिः - अत्र भाष्यं । नास्यात्मनोऽन्तर्बहिर्वा चैतन्यादन्यद्रूपमस्ति । चैतन्यमेवतु निरन्तरमस्य स्वरूपं । यथा सैन्धवघनस्यान्तर्बहिश्च लवणरस एव निरन्तरो भवति न रसान्तरम्" इति । १७ ॥

**सच्चित्सुखात्मकमखण्डितमात्मतत्वं**
**मन्येत कश्चिदहमित्यतिनिश्चितार्थः ।**
**देहेन्द्रियादिकमपि भ्रमवासनाभि**
**र्व्याप्तो ममाहमिति यद्वदविद्वदात्मा ॥ १८ ॥**

नन्वात्मा यदि सदादिरूपस्तर्हि वाक्ययुक्तिपरामर्शमन्तरेण सदहं चिदहमानन्दोऽहमित्येव प्रत्येतव्यः स्यादित्याशङ्क्याह— **सच्चिदिति** ।

यथा खल्वनात्मज्ञः प्राचीनभवपरंपरासंपादिताध्यासवासनावासितान्तःकरणतया स्थूलोऽहम्, कृशोऽहमन्धोऽहम् बधिरोऽहं ममैते दारकुमार गृहारामादय इति विविधमभिमन्यते देहेन्द्रियादिकम् । एवं कश्चिद्विपश्चिन्मूर्धन्यः सन्यस्तसमस्तकर्मा 'सत्यं ज्ञानमनन्तं ब्रह्म "विज्ञानमानन्दं ब्रह्म' 'प्रज्ञानं ब्रह्म' इत्यादि श्रुतिलक्षितं सत्यज्ञानानन्दरूपमहमिति निर्विचिकित्सं निश्चिनोतीत्यर्थः । 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्'' इति श्रुतेः । तथाचोक्तं गीतायां 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्वतः॥'' इति । उक्तं चोपदेशसहस्रिकायां— 'देहात्मज्ञानवत् ज्ञानं देहात्मज्ञानबाधकम् । आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ॥ इति । उक्तं च ब्रह्मगीतायां— "पूर्वपूर्वभ्रमोत्पन्नवासनाया वशेन तु । देहेन्द्रियादिसंघातेऽहंमतिर्जायते दृढा ॥ देहेन्द्रियादयो भावा नाहमर्थो निरूपणे। भौतिकत्वाच्च भूतांशैस्तेषामाप्यायितत्वतः ॥ मृदम्भसा यथाभित्तिर्निर्मिता वै मृदंभसा। आप्यायते तथा भुक्तैर्भूतैर्देहादयोऽपि च ॥ अतो देहादिसंघातेऽहंममेत्यादिकां मतिम्॥ विसृज्यसाक्षिचैतन्ये नित्यं कुर्यादहंमतिम् इति ॥ १८ ॥

विश्वं मृषा विरसमित्यवधीर्य धैर्या-
दास्वाद्यते मुनिभिरन्तरसौ रसात्मा ।
उच्चावचं मरुमरीचिरसं निरस्य
संसेव्यते सुमतिभिः सुरसिन्धुपूरः ॥ १९ ॥

ननु अहं दुःखीत्याद्यनुभवविरोधादात्मनः स्वरूपानन्दः सर्वथा कस्याप्यनुभवपथं नारोहतीति चेत्— सत्यं एवमेव भवादृशानां विषयलोलुपानां देहात्मबुद्धीनाम् । तद्विपरीतानान्तु कृतात्मनां निगृहीतेन्द्रियाणां विहितगुरुभगवदुपासनानां तत्प्रसादासादिताद्वैतप्रज्ञानां अनवरतं स्वरूपानन्द एवानुभवगोचर इत्याह— **विश्वमिति** । विश्वं वियदादि ब्रह्मलोकान्तं मृषा कल्पितं विरसं दुःखात्मकमिति धैर्याद्विवेकादवधीर्य तृणमिव त्यक्त्वा ततो विरज्येति यावत् । "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते इत्यादि श्रुतेः । 'कर्मणां परिणामित्वादाविरिञ्चादमङ्गलम् । विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ इति भागवतोक्तेश्च ॥ असौ रसात्मा 'रसो वै सः' इत्यादिश्रुत्या आनन्दहेतुत्वाद्रसत्वेन निरूपितः आत्मा अन्तः अन्तःकरणे स्वच्छतरे दर्पणे मुखमिव मुनिभिः मननशीलैरास्वाद्यते । आपरोक्ष्येणानुभूयते । तदुक्तं तैत्तरीयकभाष्ये—"बाह्यानन्दसाधनरहिता अप्यनीहा निरेषणा ब्राह्मणा बाह्यरसलाभादिव सानन्दा दृश्यन्ते विद्वांसः । नूनं ब्रह्मैव रसस्तेषां तस्मादस्ति तत्तेषां आनन्दकारणं रसवद्ब्रह्म' इति । उच्चावचं अनेकविधं मृगतृष्णिकायामारोपितं तोयं त्यक्त्वा भ्रमप्रमादादिरहितैः पुरुषैः गङ्गाप्रवाहो यथा निषेव्यते तथेत्यर्थः । एवं च विदुषः स्वरूपानन्दानुभवेपि दुःखित्वाद्यनुभवो मिथ्याप्रत्ययरूपो न विरुध्यत इत्याशयः । तदुक्तं भाष्ये— 'देहाद्यभिमानवद्दुःखित्वाद्यभिमानस्य मिथ्याभिमानत्वोपपत्तेः' इति

उक्तं च— "स्वप्नादिस्थानसञ्चारी विज्ञानमयनामकः । धीस्थ चैतन्य बिम्बोऽयं सदा शोचतु मुह्यतु ॥ बहुशोऽसंगवचसा निस्सङ्गत्वं ब्रुवाणया । श्रुत्यैव शोकमोहादिः बिम्बात्मनि निवारितम् ॥ अहं दुःखीति धीर्मूढं शोचन्तं प्रतिबिम्बितम् । चिदाभासं प्रगृह्णातु किमायातं चिदात्मनि ॥ आभासगतशोकोऽयं स्वात्मन्यारोप्यते यदि । आरोपोऽपोह्यते श्रुत्या निस्सङ्गत्वं ब्रुवाणया" इति ॥ १९ ॥

**एकान्तसन्निहितमीदृशमात्मतत्वं**
**लोका विमूढमतयो बत नाद्रियन्ते ।**
**आकाशगोचरमशेषजगत्प्रकाशं**
**घूका न भास्करमुदीक्षितुमुत्सहन्ते ॥ २० ॥**

प्रत्यग्रूपत्वेनात्यन्तसन्निहितं सदानन्दसंविद्रूपमीदृशं आत्मतत्वं गाढरूढमायामोहितमतयो जनाः स्वाभिन्नत्वेन द्रष्टुं न शक्नुवन्ति दौर्भाग्यादहो कष्टमित्याह— **एकान्तेति** । यथाऽनावृतप्रदेशेऽप्याकाशे स्पष्टं प्रकाशमानं सकलजगत्प्रकाशमपि भास्करमण्डलं दिवान्धाः पक्षिणः प्रेक्षितुं न प्रभवन्ति तद्वादित्यर्थः । "आराममस्य पश्यन्ति न तं पश्यति कश्चन" इति श्रुतिः । अत्रवार्तिककारः— 'आराममेव मायोत्थं स्वप्ननिर्माणलक्षणम् । पश्यन्ति जन्तवस्तस्य न तं पश्यति कश्चन ॥ प्रत्यक्षगोचरं देवं लोकं चातिप्रमादिनम् । दृष्ट्वा श्रुतिः शिरस्ताडमनुक्रोशति दुःखिता इति" ॥ २० ॥

**आनन्दविस्फुरणरूपमपि प्रपञ्च**

मन्यं विभाव्य परितापमुपैति मुग्धः ।
दीपादिषु स्ववपुषः परिदृश्यमानां
छायां विगाह्य परिमुह्यति किन्न बालः ॥२१॥

अश्वो न केवलमपातयत्पुरुषमवटमपि खनतीति न्यायेन आत्मस्वरूपे न केवलमप्रतिपत्तिर्लोकानां किं तु अन्यथाप्रतिपत्तिरपीत्याह—आनन्देति । यथा बालो भवनोदरे दीपादिषु दीप्यमानेषु तदीयप्रभातिरस्कारकस्वकरचरणाद्यवयवसंस्थानलक्षणस्वाकारकारितमूर्तिमत्तमस्समूहरूपतया वस्तुतस्तमोगतस्वाकारमन्तरेणाशक्यनिर्वचनां स्वच्छायां कृत्येति गृहीत्वा मोहं प्राप्नोति । तद्वदकृताद्वैतपरिभ्रमो बालिशश्चिदानन्दविवर्तत्वात् तद्व्यतिरेकेण दुष्करनिरूपणं प्रपञ्चं दुःखादिरूपेण भ्रमित्वा परितप्यत इत्यर्थः । तदुक्तं ज्ञानवासिष्ठे । "चिद्विलासः प्रपञ्चोऽयं सखे ते दुःखदः कथं । किमिन्द्रवारुणीराम सितया कटुतां व्रजेत् ॥" इति ॥ २१ ॥

माया स्वकीयवियदादिविकारजातैः
नात्मानमन्यथयितुं प्रभवत्यसङ्गम् ।
आधारपुष्करपलाशकमम्बुधारा
स्वीयैः किमार्द्रयितुमर्हति शीकरौघैः ॥ २२ ॥

नन्वत्र प्रपञ्चस्य चिद्विवर्तत्वं नाम चिदाश्रितमायापरिणामित्वमेव । एवं च माया स्वमाहात्म्यान्मनसाऽप्यचिन्त्यरचनारूपं प्रपञ्चं चिदात्मन्याविष्कुर्वती चिदात्मानमपि तद्धर्मकलुषितं कुतो न कुर्यात् ।

यथा हि लाक्षा पटे रागमादधाना तदाधारतन्तुसन्तानमपि रागवन्तं करोतीत्याशंक्य पुष्करपलाशवन्निर्लेपस्यात्मनस्सलेपतन्तुसन्तानदृष्टान्त वैषम्यान्न विकारधर्मवत्तेत्याह— **मायेति** । यथा सलिलधारा स्वीयैः पयःकणजालकैः स्वाधारभूतं नलिनीदलमार्द्रीकर्तुं न प्रभवति । तथा मायापि स्वविकारैराकाशादिभिः आत्मानमन्यथाकर्तुंन शक्नोति । तस्यासंगस्वभावत्वात् । 'असङ्गो ह्ययं पुरुषः' इति श्रुतेरित्यर्थः । अत एवोक्तं— 'मायामेघो जगन्नीरं वर्षत्वेष यथा तथा । चिदाकाशस्य नो हानिर्नवा लाभ इति स्थितिः इति" ॥२२॥

**आभासमात्रतनवो जगतीविकल्पा-**
**मान्न स्पृशन्त्यपि निरस्तसमस्तसङ्गम् ।**
**आरोपिता मलिनतादिविचित्रधर्माः**
**लिम्पन्ति किन्नु विमलं वियदन्तरालम् ॥**

ननु पुष्करपलाशस्य कियताप्यंशेन जलानुषङ्गोऽस्त्येव अन्ततस्तत्र- जलसंयोगस्यावर्जनीयत्वात् । तद्वदात्मनोऽपि कियताप्यंशेन विकारानुषङ्गः स्यादित्याशंक्य, अशेषसंबन्धविशेषशून्यत्वादात्मनः स्वभावस्य नैवमित्याह— **आभासेति** । यथा बालैरध्यस्ताः तलमलिनतादयो धर्माः वस्तुतस्तद्राहितं नभोविभागं न लिम्पन्ति । तथा प्रतिभासमात्रव्यतिरेकेण दुर्निरूपस्वरूपाः जगद्विभ्रमाः संयोगसमवायकार्यकारणभावस्वस्वामिभावादिसकलसंबन्धास्पृष्टस्वभावं चिद्रूपं नोपरञ्जयन्तीत्यर्थः । तदुक्तं भाष्ये— "मिथ्याज्ञाननिमित्तः शरीरस्योपभोगः । न तेन परमार्थस्वरूपस्य ब्रह्मणः संस्पर्शः । न हि

बालैस्तलमलिनतादिभिः विकल्प्यमाने व्योम्नि तलमलिनतादिविशिष्टमेव परमार्थतो व्योम भवति " इति । तत्रैव चोक्तं— 'यत्र हि यदध्यासः तत्कृतेन गुणेन दोषेण वा अणुमात्रेणापि स न संबध्यते' इति । तथा चोक्तं संक्षेपशारीरके— 'न हि कल्पनाविरचितं वितथं परमार्थवस्त्ववितथं स्पृशति । परमार्थवस्तु च तथा तमसा परिकल्पितं किमपि न स्पृशति । न हि भूमिरूषरवती मृगतृड्जलवाहिनीं सरितमुद्वहति । मृगवारिपूरपरिवारवती न नदी तथोषरभुवं स्पृशति' इति ॥ २३ ॥

**स्वप्नस्सुषुप्तमथ जाग्रदिति ह्यवस्थाः**
**तिस्रोऽपि शश्वदुदयास्तमयैरुपेताः ।**
**निर्मोकराजय इवोरगराजभोगे**
**मय्येव साक्षिणि विभान्त्यनुवर्तमाने ॥ २४ ॥**

नन्वेवं जाग्रदाद्यवस्थानां अवस्थानं न लभ्यते, सर्वसंबन्धशून्यस्यात्मनस्तदाधारत्वायोगादिति चेत् । धन्योऽसि । यद्गुरुणा शतकृत्वस्सहस्रकृत्वश्च प्रतिबोध्यमानैः स्वतो निरूपकैरपि विद्वद्भिरवबोद्धुं अशक्यमात्मनोऽवस्थात्रयसंबन्धराहित्यं स्वत एव बुद्धवानसि । नन्वसंबद्धे कथमात्मन्यवस्थानामवभास इति चेत, अध्यासादेवेत्यभिप्रेत्याह । स्वप्न इति । यथा सर्पशरीरे तत्तादात्म्यप्रच्युता अपि कञ्चुकरूपा जीर्णत्वचः तत्तादात्म्यापन्ना इव स्फुरन्ति एवं जाग्रदाद्यवस्था अपि आविर्भावतिरोभावपरिभूततया चिद्विलक्षणास्साक्षित्वेनानुस्यूते चिदात्मनि वस्तुतः तद्बहिर्भूता अपि अध्यासादन्तर्भूत

इव भान्तीत्यर्थः । तदुक्तं भाष्ये—" अवस्थात्रयसाक्ष्येकोऽव्यभिचारी, अवस्थात्रयेण व्यभिचारिणा न संस्पृश्यते । मायामात्रं ह्येतत् । यत्परमात्मनोऽवस्थात्रयात्मनाऽवभासमानत्वं रज्ज्वा इव सर्पादि-भावेन' इति । उक्तं च संक्षेपशारीरके— 'तिस्रोऽपि चिद्घन-तनोस्तव दृश्यभूता दूरे चकासति मतेर्बहिरेव तावत् । आविस्तिरो-भवनधर्मतया ह्यवस्थाः कस्संकरो विमलचिद्वपुषस्तवाभिः "। इति ॥ २४ ॥

**स्वप्नः प्रजाग्रदिति शब्दकृतो विशेषो**
**मायामयत्वमुभयोरपि तुल्यमेवम् ।**
**प्रत्यक् परागिति च नामकृतो विकल्पः**
**सत्यावबोधसुखता तु तयोः स्वरूपम् ॥ २५ ॥**

ननु स्वप्नजाग्रत्प्रपञ्चयोः प्रातिभासिकत्वव्यावहारिकत्वरूपवि-रुद्धधर्मसंबलितत्वेन यथा स्वस्वरूपतो भेदः, एवं, जीवेश्वरयोरपि प्रत्यक्त्वपराक्त्वरूपविरुद्धधर्मयोगित्वतः स्वरूपभेदः किं न स्यादि-त्याशंक्य कल्पिततादृशधर्मभेदस्य वास्तवधर्मिभेदानापादकत्वान्नैवमि-त्याह— **स्वप्न** इति । मायाकार्यत्वेनानिर्वचनीययोः जाग्रत्स्वप्नयोः प्रातिभासिकत्वमेव रूपं प्रतिभासमन्तरेण तयोर्निरूपयितुमशक्यत्वात् । न तु व्यावहारिकत्वन्नाम अन्यत्किञ्चिदस्ति । यदि च प्रतिभासस्यैव क्वचिच्चिरकालमनुवृत्तौ, तत्र व्यावहारिकमिति संज्ञा क्रियते, क्रियता-न्नाम कामं, किमेतावतैव वस्तुनः स्वरूपसत्वं भिद्यते । न हि मुहूर्ता-वस्थायिस्वप्नापेक्षया द्विमुहूर्तावस्थायिस्वप्ने सत्तावैलक्षण्यमस्ति ।

एवं च संसारोपि कश्चन दीर्घस्वप्न इत्यर्थात् पर्यवस्यति । तदुक्तं ज्ञानवासिष्ठे— "दीर्घस्वप्नमिदं विद्धि दीर्घं वा चित्तविभ्रमं । दीर्घं वापि मनोराज्यं संसारं रघुनन्दन इति" ॥ उक्तं च सूतसंहितायां— "यथा स्वप्नप्रपञ्चोऽयं मयि मायाविजृंभितः । एवं जाग्रत्प्रपञ्चोऽपि मयि मायाविजृंभितः इति ॥ तथा च यथा जाग्रत्स्वप्नयोर्नामभेदमात्रं न स्वरूपभेदः एवं जीवेश्वरयोरपि प्रत्यक् परागिति नामभेदमात्रं न सत्यादिस्वरूपभेद इत्यर्थः । तदुक्तं भाष्ये । स्थिते चैवं क्षेत्रज्ञपरमात्मैक्यविषये सम्यग्दर्शने क्षेत्रज्ञः परमात्मेति नाममात्रभेदात् क्षेत्रज्ञोऽयं परमात्मनो भिन्नः परमात्माचायं क्षेत्रज्ञात् भिन्न इत्येवंजातीयक आत्मभेदविषयो निर्बन्धो निरर्थक इति ॥'२५

**विश्रान्त बाह्य विषयव्यसनानुबन्धाः**
**सर्वेन्द्रियोपरमशान्तजगद्विकल्पाः ।**
**स्वानन्दमात्रपरिशेषितचेतसो ये**
**ते जाग्रतोऽप्यनुभवन्ति सुषुप्त्यवस्थाम् ॥२६॥**

वस्तुतस्तु सुषुप्तस्वप्नजाग्रदवस्थाः पदार्थान्तराणि न भवन्ति । किं तु मनस्संकोचमन्दविकासमहाविकासरूपतया मानसवृत्तिविशेषा एव । अतएव एकैकस्यामवस्थायां त्रिस्रोऽप्यवस्थाः ग्रन्थकारैस्तत्र तत्र निरूप्यन्ते । तथा च केचिन्महायोगिनो जाग्रदवस्थायामेव सुषुप्त्यवस्थामनुभवन्तीत्याह— **विश्रान्तेति** । बाह्यानन्दसाधनगन्धमाल्यादिविषयलौल्यगन्धवर्जितास्स्वस्वविषयेभ्यः सर्वेषामिन्द्रियाणां व्यावृत्तत्वेन प्रक्षीणबाह्यान्तरजगद्व्यापाराः वृत्तिक्षयेन स्वरूपानन्दमा-

लावशिष्टान्तःकरणा ये महात्मानः ते प्रजागरनिष्ठा अपि सुषुप्त्यवस्थामनुभवन्तीत्यर्थः । "प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्" इति श्रुत्यनुभवप्रसिद्धस्य सुषुप्त्यवस्थानियतबाह्यान्तरसकलव्यापारोपरमस्य जाग्रद्दशायामेव ब्रह्मनिष्ठेषु सुलभत्वात् सुषुप्त्यवस्थानुभवव्यपदेशः । तथा च गीतायां 'यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' इति ॥ २६ ॥

**कर्तेति कायिकविचेष्टितदर्शिनो मां**
**गृह्णन्ति चेत्किमियतैव तथा भवामि ।**
**पारिप्लवोऽयमिति पामरधीगृहीत-**
**श्चन्द्रस्तथा न हि चलाम्बुदसन्निकृष्टः ॥२७॥**

नन्ववस्थात्रयातीतसाक्षिस्वरूपब्रह्मात्मभावनैकतानमानसेष्वपि महात्मसु गमनागमनव्यवहाराभ्यवहारस्वापादिव्यापारकलाप उपलभ्यते । तत्कथमित्याशंक्य, उपलब्धृपुरुषदृष्ट्या सृष्टस्य ब्रह्मविद्यापारस्य ब्रह्मविद्दृष्ट्यसृष्टत्वेन, तदपेक्षया तस्यासत्वादित्याह । कर्तेति—यथा मारुतप्रेरितजलधरसान्निध्यादविवेकिदृष्ट्यध्यारोपितस्य चाञ्चल्यस्य चन्द्रमसि समन्वयो न भवति । एवं गमनादिचेष्टाविशिष्टशरीरोपाधिसामीप्यात्पामरदृष्ट्यध्यस्तस्य कर्तृत्वादेः "ब्रह्म वेद ब्रह्मैव भवति" ब्रह्म न ब्रह्मवित्स्वयमित्याद्यभियुक्तोक्त्युपदर्शितब्रह्मात्मभावे ब्रह्मविदि कथंचिदप्यनुप्रवेशो न भवतीत्यर्थः । तदुक्तं भाष्ये—पूर्वप्रसिद्धकर्तृत्वभोक्तृत्वविपरीतं हि त्रिष्वपि कालेष्वकर्तृत्वाभोक्तृत्वस्वभावं ब्रह्माहमस्मि नेतः पूर्वमपि कर्ता भोक्ता वा

ऽहमासम् । नेदानीं नापि भविष्यत्काल इति ब्रह्मविदवगच्छति ” इति । उक्तं च पञ्चदशप्रकरणे, निद्राभिक्षे स्नानशौचे नेच्छामि न करोमि च। द्रष्टारश्चेत्कल्पयन्ति किं मे स्यादन्यकल्पनात्। गुञ्जापुञ्जादिदह्येत नान्यारोपितवह्निना । नान्यारोपितसंसारधर्मानेवमहं भजे ' इति ॥ २७ ॥

मिथ्या समुल्लसतु नाम जगद्विचित्र-
मेतावतापि मम तत्त्वविदो न हानिः ।
स्वप्ने भयङ्करगजादिनिरीक्षणेऽपि
न स्वाप्निकत्वमनुसन्दधतोऽस्ति भीतिः ॥

**ननु** ब्रह्मसंपन्नस्य जगद्भासो नोपपद्यते । “सता सोम्य तदा सम्पन्नो भवति” इत्यादि श्रुतिषु प्रतिभासहीनायां सुषुप्त्यवस्थायामेव पुरुषस्य ब्रह्मसंपत्त्युपदेशदर्शनात् । जगत्प्रतिभाने च तदुपहितभयशोकादेरनिवार्यत्वाद्ब्रह्मात्मतैव विहन्येतेत्याशंक्य स्वप्नदृष्टान्तेन समाधत्ते— **मिथ्येति** । यथा स्वप्ने जिघांसावेशवैवश्यसमापतद्भयंकरदन्तिशार्दूलादिदुष्टजन्तुसन्दर्शनमनुभवतस्तद्दशायामेव दृश्यमाने दन्त्यादौ स्वप्नकल्पितत्वानुसन्धाने सति तदधीनभयशोकादिकं नोत्पद्यते । तथा निर्विचिकित्सं साक्षात्कृतब्रह्मणः पुरुषधौरेयस्य प्रारब्धकर्मवशाद्विचित्रजगत्प्रतिभासमनुभवतोऽपि प्रतिभासमाने जगति मिथ्यात्वनिश्चयेन तत्प्रयुक्तभयशोकादिप्रसक्त्यभावान्न ब्रह्मताहानिरित्यर्थः । तथा च श्रुतिः “ आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन ” इति । उक्तं च— “ आत्मज्ञः शोकसंतीर्णो न बिभेति

कुतश्चन । मृत्योः सकाशान्मरणादथवान्यकृताद्भयात' इति ।
अत्र च स्वाप्निकस्यापि मिथ्यात्वनिश्चयस्य स्वप्नगजादिभ्रमनिवर्तकत्वन्नानुपपन्नं । अत एव ब्रह्मनिष्ठस्य जाग्रद्दशायां दृढतरसार्वात्म्यज्ञानाभ्यासवासनावशात्स्वप्नेऽपि कदाचिज्जायमानम् "अहमेवेदं सर्वोऽस्मीति मन्यत" इति श्रुत्युपदर्शितं सार्वात्म्यज्ञानं न भ्रमरूपमित्युपपादितं तत्रत्ये वार्तिकसारे । तत्र हि सार्वात्म्यमित्युपक्रम्य वेदान्तमानसिद्धत्वाज्जागरे तन्न बाध्यते । स्वप्नेऽपि बाध्यते नैव यथावस्त्ववभासनात् । अतस्सर्वोऽस्मीति मतिर्नैव स्वप्नेऽपि विभ्रमः" इति ॥ २८ ॥

**अत्यन्तमेतदसदित्यपि च व्यवस्य**
**अध्यात्मदृष्टिरनुवर्तत एव लोकम् ।**
**नास्त्यत्र वक्त्रमिति निश्चयवानपि**
**द्रागादत्त एव मुकुरं मुखदर्शनाय ॥ २९ ॥**

नन्वध्यात्मदर्शनवतः त्रिष्वपि कालेषु प्रपञ्चनास्तित्वनिश्चयेन, इष्टानिष्टसाधनयोरसत्यत्वज्ञानाभावेन इष्टप्राप्त्यनिष्टपरिहारार्थं कथं प्रवृत्तिनिवृत्ती स्याताम् । न हि शुक्तितत्त्वसाक्षात्कारवतो रजतभ्रमदशायामिव रजतार्थं शुक्तौ प्रवृत्तिरस्ति । न वा रज्जुतत्त्वसाक्षात्कारवतस्सर्पभ्रमदशायामिव रज्जुप्रदेशान्निवृत्तिरस्तीत्याक्षेपं दर्पणमुखदृष्टान्तेन प्रत्याचष्टे—**अत्यन्तमिति** । यथा मदीयं मुखं कालत्रयेऽपि दर्पणे नास्तीति निश्चयवतोऽपि स्वमुखदर्शनार्थं दर्पणोपादानं दृश्यते तथा विदुषोऽपि लौकिकप्रवृत्यादिकमुपपद्यत इत्यर्थः । अयं

भावः । निरुपाधिकत्वेन संप्रतिपन्नेषु शुक्तिरजतादिभ्रमेषु अधिष्ठान-शुक्त्यादिसाक्षात्कारेणारोपितरजतप्रतिभासो निवर्तते । सोपाधिकत्वेनाभिमतेषु द्वैतदर्पणमुखादिभ्रमेषु अध्यस्तद्वैतदर्पणमुखादिप्रतिभासनिवृत्तौ तदुपाधिभूतप्रारब्धदर्पणादिनिवृत्तिरपि निमित्तं भवति। न तत्त्वसाक्षात्कारमात्रम् । एवं च दर्पणापसरणपर्यन्तं मुखप्रतिभासवत्प्रारब्धनाशपर्यन्तं द्वैतप्रतिभासानुवृत्त्या मिथ्याभूतेष्टानि-ष्टसाधनताज्ञानसंभवाद्विदुषो लौकिकप्रवृत्त्यादौ न काचिदनुपपत्तिः । नह्येष्टानिष्टसाधनयोस्सत्यत्वज्ञानमपि लौकिकप्रवृत्यादावुपयुज्यत इति । तदुक्तं पञ्चदशप्रकरणे— 'मिथ्यात्ववासनादार्ढ्ये प्रारब्धक्षयकाङ्क्षया ।अक्लिश्नन्तः प्रवर्तन्ते स्वस्वकर्मानुसारतः' ॥ इति ॥ २९॥

उद्बोधितोऽपि कबले कवले जनन्या
निद्रालसः शिशुरिवाविदितान्यभावः ।
आलोकयन्नपि बहिर्जगदिन्द्रजाल-
मन्तः कयापि कलया न परिच्युतोऽस्मि॥

नन्वेवं प्रारब्धकर्मानुसारेण विदुषोऽपि व्यापाराभ्युपगमे बृह्मण्यनन्यव्यापारतालक्षणा ब्रह्मसंस्था विरुध्यत इत्याशंकायामाह— उद्बोधित इति । यथा निशीथे बुभुक्षितो निद्रालुः बालोऽङ्के निधाय वत्सलया जनन्या प्रतिकबलं भुक्ष्वभुंक्ष्वेति उद्बोध्यमानोऽप्यहममुष्याः पुत्र इति वा भुञ्जानीति वा इदं भोज्यमिति वा किञ्चिदप्यविजानन्नेव भुञ्जानोऽप्यन्तर्लीननिद्राया निद्राया न प्रच्युतो भवति ।

एवं विद्वानपि मिथ्याभूतजीवनोपयुक्तजगद्व्यापारमाचरन्नपि व्यवहारगते क्रियाकारकभावे तत्फले च कटाक्षमनिक्षिपन्नन्तःसन्तन्यमानाया ब्रह्मसंस्थाया न प्रच्युतो भवतीत्यर्थः । तथा च श्रुतिः "आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्द" इति । उक्तं च । "जीवन्मुक्तो रतिक्रीडामिथुनानन्दलक्षणान् । व्यवहारान्प्रगृह्णाति प्रारब्धस्यानुसारतः ।। सुखदुःखार्थप्रारब्धकर्मवेगश्चतुर्विधः । तीव्रो मध्यो मन्दसुप्ताविति तस्य विधाः श्रुताः ।। तीव्रवेगस्तु पश्चादितुल्यो नात्मानमीक्षते । आत्मनि प्रीतिरस्तीति भवेदात्मरतिस्तदा ।। मध्यवेगस्तु भोगानां प्राधान्यं स यदा तदा । कृत्वा स्ववशमात्मानं विद्वान् क्रीडति बालवत् ।। मन्दवेगस्तिरस्कृत्य भोगान्प्रायेण चिन्तयन् । धियात्मानं द्वन्द्वसुखं प्राप्नोति मिथुनं तथा ।। सुप्तवेगस्तु निर्विघ्नं निर्विकल्पसमाधिभाक् । आत्मानन्दविवेकस्सन्नास्ते मुक्तवदद्वयः" ।। इति उक्तं च पञ्चदशप्रकरणे—"देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः । तारं जपतु वाक् तद्वत् पठत्वाम्नायमस्तकम् ।। विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानन्दे विलीयताम् । साक्ष्यहं किञ्चिदप्यत्र न कुर्वे नापि कारये" इति ।। उक्तं च ज्ञानवासिष्ठे—"परव्यसनिनी नारी व्यग्रापि गृहकर्मणि । तदेव चिन्तयत्यन्तः परसङ्गरसायनम् ।। एवं शुद्धे परे तत्वे धीरो विश्रान्तिमागतः । तदेवास्वादयत्यन्तर्बहिर्व्यवहरन्नपि" इति ।। ३० ।।

**दृश्ये स्फुटीभवति नेष्यत एव भूमा**
**भूम्नि स्फुटीभवति नेष्यत एव दृश्यम् ।**

द्वीपान्तरे स्फुरति भूमिरियं न दृश्या
भूमण्डले स्फुरति तच्च तथापिधानम् ॥३१॥

ननु स्थिरप्रज्ञस्य बहिर्व्यवहारेऽपि ब्रह्मसंस्था न विरुध्यत इत्युक्तम् । तर्हि मन्दप्रज्ञस्य कथमित्यपेक्षायामाह—दृश्य इति । यथा समुद्रमार्गेण पञ्चषड्योजनान्तरितद्वीपान्तरगमने क्रमेण द्वीपान्तरस्य स्फुटीभावे सति, जम्बूद्वीपं तिरोहितं भवति । प्रत्यागमने तु क्रमेण जम्बूद्वीपस्फुटीभावे सति द्वीपान्तरं तिरोहितं भवति । एवं दृश्यस्य स्फुटं प्रतीतौ, दृग्रूपं न स्फुरति । दृग्रूपस्य स्फुटं प्रतीतौ दृश्यं न स्फुरतीत्यर्थः । तदुक्तं ज्ञानवासिष्ठे—"स्वरूपे निर्मले नित्ये निमेषमपि विस्मृते । दृश्यमुल्लासमायाति प्रावृषीव पयोधरः ॥ अनारतानुसन्धानाद्धृदि नित्यं प्रकाशिते । स्वरूपे नोन्मिषत्येषा दाशा दृश्यपिशाचिका ॥" इति । एवं च मन्दप्रज्ञस्य दृश्यविस्मरणार्थं दृग्रूपे ब्रह्मात्मनि प्रत्ययावृत्त्या भाव्यमित्याशयः ॥ ३२ ॥

बोधे शनैरुपचयं प्रतिपद्यमाने
विच्छिद्यते हृदि तदा विविधभ्रमोऽपि ।
चन्द्रे कलाभिरनुवासरमेधमाने
मन्दीभवत्यपि तथैव महान्धकारः ॥ ३२ ॥

नन्विदमयुक्तं शतवारमावृत्तावपि ब्रह्मज्ञाने विशेषस्य दुस्संपादत्वात् । न हि चिदेकरसतया वस्तुतो निरंशे तस्मिन्सकृद्विज्ञाते सति ज्ञातव्यं किंचिदवशिष्यते । अन्धकारस्थघटादेस्तु सांशत्वेन तस्मिन्नेकांशान

ज्ञातेऽप्यज्ञातांशान्तरसद्भावात्तत्रालोकतारतम्येन ज्ञानतारतम्यं युक्तमित्याशंक्य चेतनस्य वस्तुतो निरंशत्वेऽपि अविद्याकल्पितसत्यत्वाद्यनेकांशवत्तया तत्तदंशसंशयविपर्ययनिरासेन प्रत्ययाभ्यासस्य सप्रयोजनत्वं युक्तमित्यभिसंन्धिमानाह—बोध इति। यथा प्रतिपत्प्रभृति प्रतिदिनमेकैककलया क्रमाद्वर्धमानस्य चन्द्रस्योत्तरोत्तरमुहूर्ताधिकांशेन निशायामवस्थाने सति निशायाश्च तथैवोत्तरोत्तरमुहूर्ताधिकांशेन तमो निवर्तते । एवं सत्यत्वाद्येकैकाधिकांशेन तत्वज्ञाने सति तथैव तदधिकांशेन संशयादिकं निवर्तत इत्यर्थः । तथा च श्रुतिः—"भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥" इति । एवं च नैरन्तर्येण चिरकालं प्रत्ययाभ्यासे क्रियमाणे क्रमेण सकलांशसंशयनिवृत्या तत्वज्ञानं दृढं भवतीत्यभिप्रायः ।१०

ब्रह्मानुभूतिरसनिर्भरिते मुनीन्द्रे
कर्मानुबन्धिविधयो विमुखीभवन्ति ।
सिद्धोपदर्शितरसायनपानतृप्ते
किं न्वद्य (नव्य) पाकविषया विधयः क्रमन्ते ॥११

ननु एवमपि विदुषः प्रत्ययाभ्यासे नैरन्तर्यं न लभ्यते । शास्त्रचोदिततत्तत्कालकर्तव्यकर्मकलापानुष्ठानस्यावश्यंभावादननुष्ठाने च प्रत्यवायप्रसङ्गादित्याशंक्य विदुषोऽधिकाराभावादेव तद्विषये विधिशास्त्राणि न प्रवर्तन्त इत्याह— ब्रह्मेति । वर्णाश्रमाध्यासवतो ब्राह्मणानधिकृत्य कर्मविधयः प्रवृत्ताः । कर्माणि च चित्तशुद्धिप्रणाड्या ज्ञानोत्पत्तावुपयुज्यन्ते । उत्पन्ने तु कर्मानुष्ठानमुख्यप्रयोजने ज्ञाने-

तद्वति निर्मथितनिखिलाध्यासतया निरधिकारे पुरुषविशेषे कर्मविधयो न प्रवर्तन्ते । यथा सिद्धपुरुषवितीर्णरसायनपानापाकृतक्षुत्पिपासतया नित्यतृप्ते पुरुषविशेषे तृप्तिपरंपरासाधनपाकक्रियाविषया विधयो न प्रवर्तन्ते । तद्वदित्यर्थः । तदुक्तं भाष्ये—" अविद्यावद्विषयाणि शास्त्राणीति । अलंकारो ह्ययमस्माकं यद्ब्रह्मात्मावगतौ सत्यां सकलकर्तव्यताहानिः कृतकृत्यता चेति ' इति च । उक्तं च उपदेशसहस्रिकायां—" दशाहाशौचकार्याणां पारिव्राज्ये निवर्तनम् । यद्वद्विज्ञानसंप्राप्तौ तथा जात्यादिकर्मणाम् " इति ॥ ३३ ॥

सर्वात्मतामुपगतोऽपि मुनिस्समाधिं
पूर्वानुवृत्तमयते समयापनुत्त्यै ।
पर्याप्तसर्वविभवः क्षितिपो हि काल-
निर्यापणाय जुषते चतुरङ्गमेव ॥ ३४ ॥

ननु तर्हि विद्वान्प्राप्तकामत्वात्समाधिमपि न कुर्यादित्यत आह—सर्वेति । यथा संपूर्णसर्वैश्वर्यो राजा कालक्षेपार्थं चतुरङ्गाख्यं क्रीडाविशेषमेव सेवते । पूर्वं दिग्विजयदशायां रथगजतुरगपदातिचतुरङ्गव्यवहारस्य दृढमभ्यस्तत्वात् तद्वासनया तच्छायापन्ने तत्रैव तस्य मनः प्रवर्तते । नान्यजातीये विहारे, तत्र तद्वासनाभावात् । एवमधिष्ठानब्रह्मसंपत्त्या सर्वात्मतां प्राप्तोऽपि मुनिः कालक्षेपार्थं समाधिमेव निषेवते, पूर्वसंस्कारात् । न तु व्यापारान्तरे कटाक्षमर्पयतीत्यर्थः ॥ ३४ ॥

आत्मज्ञमस्तमितसर्वविधप्रवृत्ति-
मानन्दयन्ति निगमाभिमता निषेधाः

व्यापारमात्रविमुखस्य महालसस्य
माध्यन्दिकव्यवहृतानि मनोहराणि ॥ ३५ ॥

ननु विधिशास्त्रवन्निषेधशास्त्रस्यापि ज्ञानिषु प्रवृत्त्यभावात्तेषां यथेच्छचेष्टत्वप्रसङ्ग इत्याशंक्याह—आत्मज्ञमिति । यथा स्वभावादत्यन्तमलसस्य निमेषोन्मेषयोरप्यायासमनुभवतस्सर्वव्यापारपराङ्मुखस्य किमपि मा कुरु तूष्णीमास्स्वेति गुरुजनवचनानि सन्तोषमेव जनयन्ति सर्वकर्तव्यपरित्यागेन गुरुजनः कोपं करिष्यतीति भयेन वेपमानस्य गुरुजनेनैव कर्तव्यनिषेधे कृते प्रागेव त्यक्तव्यापारस्य तस्यानुकूलाचरणात् सन्तोषः कथं न स्यात्! । एवं लौकिकवैदिकसर्वविधव्यापारप्रवृत्त्युपरमसंपन्नस्य निषेधपराणि "न कलञ्जं भक्षयेत् । न सुरां पिबेत्" इत्यादीनिशास्त्राण्यानन्दमावहन्ति । शास्त्रचोदितपरित्यागेन किमनिष्टमापत्स्यते वेत्युद्वेगस्य शास्त्रानुवृत्त्या निवृत्तत्वेन स्वानुकूलतया विदुषः निषधशास्त्रेभ्य आनन्दः किं न स्यात्! । तदुक्तं भागवते— 'दोषबुद्ध्योभयातीतो निषेधान्न निवर्तते । गुणबुद्ध्या च विहितं न करोति यथार्भकः' इति ॥ ३५ ॥

तत्वानुचिन्तनपरो मुनिसार्वभौमः
स्वच्छन्दतो व्यवहरन्नपि नानुयोज्यः ।
साम्राज्यमेत्य हि यथारुचि वर्तमानः
राजा प्रजाभिरनुयोक्तुमशक्य एव ॥ ३६ ॥

ननु प्रमादाद्विदुषः कदाचिदतिप्रसङ्गे प्रत्यवायस्स्यादित्याह...त्त्वेति । यथाऽखण्डमण्डलाधिपत्यं प्राप्तो राजा नीतिमार्गमति

लङ्घ्य यथेष्टं चेष्टमानोऽपि कथमेवं क्रियत इति पौरजानपदैः प्रष्टुमपि न शक्यते, तथा मुनिचक्रवर्ती वैदिकमर्यादामतीत्य स्वच्छन्दं विषयेषु वर्तमानोऽपि निषेधपरेण श्रुतिवाक्यसहस्रेणापि निवर्तयितुं न शक्यते । तस्य वेदकिंकरत्वाभावात् । तथाचोक्तं— 'निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेध' इति—सूतसंहितायां ज्ञानिनं प्रस्तुत्योक्तं— "स्वच्छन्दं वर्ततां लोके कोवा तस्य निवारकः" इति । उक्तं च गीतायां— " अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधा च पृथक्चेष्टा दैवञ्चैवात्र पञ्चमम् ॥ शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः । न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ तत्रैवं सति कर्तारमात्मानं केवलन्तु यः । पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ यस्य नाहंकृतोभावो बुद्धिर्यस्य न लिप्यते । हत्वापि स इमाँल्लोँकान्नहन्ति न निबध्यते ॥" इति । अनुभूतिप्रकाशिकायां तु ज्ञानिनः पापाचरणेऽपि हानिर्नास्तीत्युपक्रम्योक्तं " यतो हितविदश्शिष्टा मूढवन्नियमेन तत् । कुतः पापं त्यजन्तीति चेद्रहस्यमिदं शृणु ॥ यद्यप्यामुष्मिकी हानिर्नास्त्यथाप्यैहिकी तु सा । महती विद्यते तेन पापं यत्नेन वर्जयेत् ॥ शिष्टास्त्यजन्ति पापिष्ठं प्रत्यवायनरकस्सहि । तन्निंदकस्तस्य पापं गृहीत्वा नरकं व्रजेत् ॥ श्रोता कामी तु संसर्गात् स्वयमप्याचरेत्तथा । इत्थं दोषत्रयं दृष्ट्वा शिष्टाः पापं त्यजन्ति हि ॥ किंच पुण्यरतः पूर्वं ज्ञानमाप्नोति नान्यथा ॥ पश्चाद्वासनया ज्ञानी पुण्यकर्म करोत्यसौ । किं बहूक्त्या तत्त्वविदो न भयं पारलौकिकम् ॥ उपदेशसहस्र्यां च तथाचार्यैरुदीरितम् । परलोकभयं यस्य नास्ति-

मृत्युभयं तथा । तस्यात्मगस्य शोच्याःस्युः सब्रह्मेन्द्रा अपश्विराः ॥ इति ॥ ३६ ॥

पूर्वोत्तरार्जितशुभाशुभकर्मभिस्स्वै-
स्संपद्विपच्च न भवेत्परमार्थदृष्टेः ।
जात्यूषरस्य घनवर्षजलाभिषेकै-
रत्यूष्मणापि च न सस्यसमृद्धिहानी ॥३७॥

ननु माभूद्विदुषः पापाचरणे प्रत्यवायः अनिष्टसाधनत्वान्निष्कामस्य कादाचित्कपुण्यकर्मानुष्ठानेऽप्यभ्युदयस्तु भवेत । तस्यानिष्टसाधनत्वाभावेन पूर्ववद्बाधकाभावादित्याशङ्क्य पापकर्मणां प्रत्यवायोत्पत्ताविव पुण्यकर्मणामप्यभ्युदयोत्पत्तौ सामर्थ्यं नास्ति । विद्वदात्मनोऽसंगोदासीनब्रह्मस्वरूपत्वेन कर्मफलं प्रति स्वरूपायोग्यत्वादित्याह— पूर्वेति । यथाङ्कुरसामान्योत्पत्त्ययोग्यस्योषरसंज्ञभूविशेषस्य वार्षिकसलिलधारासेचनेन सस्यसमृद्धिर्न भवति निदाघसूर्यातपोष्मणा हानिश्च न भवति । तथा ज्ञानोत्पत्तेः पूर्वं तज्जन्मनि जन्मान्तरे च कृतैर्ज्ञानोत्पत्त्यनन्तरं क्रियमाणैश्च पुण्यापुण्यकर्मभिरात्मज्ञेऽभ्युदयप्रत्यवायौ नोत्पद्येते इत्यर्थः । तथा च सूत्रं— "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ।" तदधिगमे ब्रह्मसाक्षात्कारे उत्तरस्य ज्ञानादूर्ध्वं क्रियमाणस्य पुण्यपापद्वयस्य अश्लेषः संबन्धाभावः । तत्पूर्वंकृतस्य पुण्यपापद्वयस्यतु नाशः । यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवं विदि पापं कर्म न श्लिष्यते । 'तद्यथैषीकातूलमग्नौप्रोतं प्रदूयेतैवंहास्य सर्वे पाप्मानः प्रदूयन्त'

इत्यादिश्रुतौ तस्योक्तार्थस्य व्यपदेशादित्यर्थः । तथा च गीतायां—"यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा" इति ॥ ३७ ॥

आरब्धजामधिकसंपदमापदं वा
भुञ्जान एव पुरुषः परिशुद्धिमेति ।
किं वाहितुण्डिकगृहीततनुर्भुजङ्गः
तत्पिण्डदण्डनविधीन्परिहर्तुमीष्टे ॥ ३८ ॥

प्रारब्धाख्यं कर्म तु भोगादेव क्षीयत इत्याह— **आरब्धेति** । यथा सर्पग्राहिणो हस्तलग्नः सर्पः तद्दत्तमाहारं प्रहारं चानुभुङ्क्ते न पुनः परिहर्तुं शक्नोति । एवं अविद्वानिव विद्वानपि प्रारब्धोपस्थितसुखदुःखानुभवं नातिवर्तत इत्यर्थः । तथा च सूत्रं 'भोगेन त्वितरे क्षपयित्वा संपद्यत' इति ॥ ३८ ॥

प्रारब्धकर्मपरिपाकवशंवदो न
क्लिश्नाति निश्चितपरावधिरात्मवेदी ।
ग्रामान्तमार्गपरिमाणविदध्वनीनो
मध्येपथन्नहि विषीदति दुःखितोऽपि ॥ ३९ ॥

एवं प्रारब्धवशाद्दुःखमनुभवतोऽपि विदुषः पामरवत् क्लेशो न भवतीत्याह— **प्रारब्धेति** । यथा पथिक एतावति दूरे गन्तव्यग्रामो वर्तत इति मार्गयत्तानिश्चयवान् मार्गमध्ये कर्दमसंमर्दकण्टकतोदवर्षवातातपक्षुत्पिपासादिपीडितोऽपि धैर्यान्न लक्षीकरोति ।

मार्गेयत्ताज्ञानशून्यस्तु धैर्याभावाद्विषीदति । तथा विद्वान्प्रारब्धाधीनं दुःखमनुभवन्नपि पुरुषायुषावधिकं तद्दुश्चेष्टितमिति निश्चिन्वन्धैर्यान्न व्यथते । अज्ञस्तु धैर्याभावाद्व्यथत इत्यर्थः । तदुक्तं पञ्चदशप्रकरणे—"ज्ञानिनोऽज्ञानिनश्चापि समे प्रारब्धकर्मणि । न क्लेशो ज्ञानिनो धैर्यात् मूढः क्लिश्यात्यधैर्यतः" ॥ उक्तं च—"शोकस्थानसहस्राणि भयस्थानशतानि च । दिवसे दिवसे मूढमाविशन्ति न पण्डितमिति ॥ ३९ ॥

अन्तर्बहिश्च परमार्थतयानुपश्य
नाक्लिश्यते व्यसनमुत्कटमप्युपेतः ।
वीरः किलाहवमुखे विजयैकदृष्टिः
प्रत्यर्थिभिः प्रमथितोऽपि न विक्लवस्स्यात् ॥

अमुमेवार्थं दृष्टान्तान्तरेणोपष्टंभयति । अन्तरिति । बाह्यमाभ्यन्तरंच प्रपञ्चं परमात्मभावेन भावयन्मुनिस्तन्मात्रविश्रान्तचित्तवृत्तितया महद्दुःखं प्राप्तोऽपि न व्यथते । यथा विक्रमनिधिर्भूपति र्महति युद्धे प्रवर्तमानो विरोधिभिरभिहन्यमानोपि स्वोद्दिश्यविजय मात्रतत्परतया तत्कृतमभिभवं न लक्षीकरोति तद्वदित्यर्थः ॥ ४० ॥

प्रापञ्चिकस्तु विभवः परमाद्भुतोऽपि
धीरं न रञ्जयति दृष्टतदीयतत्वम् ।
स्त्रीवेषभूषिततनुः पुरुषो विलासै
स्तज्ञं युवानमपि रञ्जयितुं हि नालम् ॥४१॥

एवं प्रारब्धवशात्सुखदुःखसाधनोपस्थितावपि विदुषः पामरवन्मनोविकारो न भवतीत्याह—प्रापञ्चिक इति—यथा लोकोत्तरसौन्दर्यधुर्यमत्तकाशिनीमतल्लिकाभूमिकापिहितपुंरूपस्य सभामुपेत्य तत्रत्यान्परित्यक्तविषयैषणानपि मनीषिणो हावभावादिविलासभेदैर्दुर्निवारमनोविकारोत्पादनेन स्ववशीकुर्वन्नपि स्त्रीजातिवेषमात्रसन्दर्शनसुलभमनोभवोद्रेकमपि पारमार्थिकस्वीयपुंरूपभूयोदर्शनशालितया जुगुप्समानं पुरुषं विलासशतेनापि व्यामोहयितुं न शक्नोति तथा प्राकृतानां विस्मयकरोऽपि स्रक्चन्दनसुन्दरीप्रमुखरसहेतुर्वैषयिको विभवो विकारसामग्रीसमवधानेऽपि विक्रियारहितचेतसं सातिशयत्वक्षयिष्णुत्वमिथ्यात्वादितदीययाथात्म्यदर्शिनं स्वानुरक्तं कर्तुं नार्हतीत्यर्थः । तदुक्तं—'न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति'। इति । उक्तं च ज्ञानवासिष्ठे— न केचन जगद्भावास्तत्त्वज्ञं रञ्जयन्त्यमी । नागरं नागरीकान्तं कुग्रामललना यथा ॥ ४१ ॥

अन्तर्निरन्तरनिरूढनिजात्मतत्त्वो
न प्रागिव व्यसनितां विषयेषु धत्ते ।
भाग्यात्कुतश्चिदपि लब्धनिधिर्मनस्वी
किं पूर्ववत्कृपणतामुररीकरोति ॥ ४२ ॥

उक्तार्थे निदर्शनान्तरमाह—अन्तरिति । स्पष्टोऽर्थः । तदुक्तं "विषया विषमोदया निकामं शतशो मामुपरुन्धतामथापि। परिपूर्णसदात्मबोधोऽस्मीत्यनिशं चेतसि भावयन्नुदासे" ॥ ४२ ॥

अध्यासितस्वमहिमानमलंक्रियावद्
दाध्यात्मिकाऽशुभगुणास्स्वयमाविशन्ति ।
स्वाधीनिते सुहृदि राजनि तस्य भृत्या
ये तेऽपि च स्वयमुपेत्य तमाश्रयन्ते ॥ ४३ ॥

एवं परमानन्दलक्षणसाक्षात्कारधुरन्धरं पुरुषोत्तममद्वेष्टृत्वादयोऽमानित्वादयश्च भगवद्गीतोक्तात्मगुणास्स्वयमेवालङ्कारवदनुवर्तन्ते पूर्वाभ्यस्ततद्वासनाबलात् न तु पूर्ववदमुष्य तेष्वनुष्ठेयत्वेनाग्रहोऽस्ति । तत्साध्यस्य तत्त्वज्ञानस्य प्रागेव सिद्धत्वात् । यथा सामाजिकानुसरणेन परिचिते राज्ञि क्रमेण स्वाधीने च सम्पन्ने विचक्षणः पूर्ववत्तदनुसरणन्न करोति । फलाभावात् । प्रत्युत त एवामुमाश्रयन्ते । तद्वदित्याह—अध्यक्षितेति । स्पष्टोऽर्थः । तदुक्तं—"आर्यता हृद्यता मैत्री सौम्यता समता ज्ञता ।समाश्रयन्ति तं नित्यमन्तःपुरमिवाङ्गनाः" इति ॥ ४३ ॥

अज्ञानमेव न कुतो जगतः प्रसङ्गो
जीवेशदेशिकविकल्पकथाऽतिदूरे ।
एकान्तनिर्मलचिदेकरसस्वभावं
ब्रह्मैव केवलमहं परिपूर्णमस्मि ॥ ४४ ॥

इदानीं समस्ताध्यात्मशास्त्रसिद्धान्तसंप्रदायरहस्यमाह...अज्ञानमिति । अज्ञान वस्तुगत्याब्रह्मव्यतिरिक्तं नास्त्येव तस्यारोपितत्वेनानिर्वचनीयत्वात् । तदभावादेव तत्कार्यत्वेनाभिमतस्य प्रपञ्चस्य प्रसक्तिरेव

नास्ति, कारणाभावे कार्यानुदयात् । तत एव जीवेश्वराचार्यविकल्पा न संभवन्ति । तस्मात्सर्वप्रपञ्चविलक्षणं प्रत्यगभिन्नं सत्यज्ञानानन्दलक्षणं ब्रह्मैव केवलमद्वितीयं परिशिष्यत इत्यर्थः । तथा च श्रुतिः—'न निरोधो न चोत्पत्तिर्न बन्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ।' 'अथात आदेशोनेति नेती'त्याद्या । तदुक्तं ज्ञानवासिष्ठे "सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि । नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्लमम् ।।" इति । उक्तं च सूतसंहितायाम् । 'न हि जनिर्मरणं गमनागमौ न च मलं विमलं न च वेदनम् । शिवमयं सकलं हि विभासते स्फुटतरं परमस्य तु योगिनाम् । ४४॥

समाध्यवस्थाविर्भूतश्रीविघ्नेशनिदेशतः ।
परमानन्दयोगीन्द्रपूज्यपादाभ्यनुज्ञया ॥ ४५ ॥

नल्लासुधीनिबद्धेयमद्वैतरसमञ्जरी ।
अन्तर्मुखैर्विपश्चिद्भिरादरेणानुगृह्यताम् ॥ ४६ ॥

एवं कृतस्य स्वग्रन्थस्य विद्वदनुभवमूलतया तदनुग्रहं ग्रन्थकारः प्रार्थयते—समाधीति । स्पष्टोऽर्थः ॥ ४५ ॥ ४६ ॥

भवरोगस्यौषधमिति
पातुं कटुमौपनिषदभावमसौ ।
विरचय्यामृतघुटिकां
वितरति नल्लाकविः करे सुधियाम् ॥ ४७ ॥

भाष्यादिमूलग्रन्थापेक्षया अत्र प्रवृत्तिसौलभ्यं दर्शयितुं स्वग्रन्थमधिकृत्य प्रीत्यतिशयेन श्रीमद्वेदान्ताचार्यचरणोक्तं श्लोकमनुग्रहरूपं मत्वा ग्रन्थतो निबध्नाति—**भवरोगस्येति** । यथोदरव्यथादिरोगोपशामकत्वेन प्रतिपदोक्तस्यार्द्रकमरीच्याद्यौषधविशेषस्य प्रकृत्याऽत्यन्तकटुत्वेन स्वरूपेणोपयोक्तुमशक्यस्यापि केनचित्प्रकारविशेषेण रसायनघुटिकाद्यात्मना स्वादुतया निष्पादितस्य तस्यैवाबालवृद्धं सुखोपयोग्यत्वमातन्वन् भिषगखिलाभिनन्द्यो भवति। एवमनाद्यनन्तनिरन्तरदुःखप्रवाहरूपसंसारमहारोगनिबर्हणत्वेन महौषधरूपस्य वेदान्तमुख्यतात्पर्यार्थस्य स्वतोऽतिगहनत्वेन कटुभूतस्याप्यमृतघुटिकात्मकैतद्ग्रन्थसन्दर्भगर्भितत्वेन करतलामलकवद्विस्पष्टतया विभाव्यत्वमापादयन्नेतद्ग्रन्थकर्ता नल्लाकविः कृतकृत्यो भवतीत्यर्थः ॥ ४७ ॥

इति श्रीकौशिककुलजलधिचन्द्र **श्रीबालचन्द्रदीक्षिततनूभवस्य**
परमहंसपरिव्राजकाचार्यपरमशिवेन्द्रपूज्यपादशिष्य श्रीसदा-
**शिवेन्द्रपूज्यपादानुग्रहभाजनस्य नल्लाकवेः** कृतिषु
स्वकृताद्वैतरसमञ्जरीव्याख्या परिमलाख्या

**संपूर्णा ॥**

ओं तत्सत् ॥



